

सम्पुटिः-०१ सञ्चिका-०९

सप्तगिरि अनुबन्धम्

तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## नवम्बर् -२०२०

## विषयसूचिका



मुखचित्रम् - श्रीमहालक्ष्मीमातुः

अन्तिमरक्षापुटः - नरकासुरवध



# महालक्ष्मीः

- सि. आदिलक्ष्मीः

सम्पदधिदेवता लक्ष्मीः विष्णोः पत्नी। जगद्रक्षणाय ऐश्वर्यम् अपेक्षितम् भवति। त्रिमूर्तिषु विष्णुः जगतः रक्षकः। उचितमेव यत् ऐश्वर्य देवता लक्ष्मीः एव अस्य पत्नी अस्तीति। लक्ष्मीः यत्र तत्र सम्पद् भवति। सा च सम्पद् बहुविधा भवति - धनसम्पत्तिः, बुद्धिसम्पत्तिः इत्यादि। लोके यद्यदपेक्षणीयं तत्सर्वं लक्ष्म्याः अनुग्रहेण एव सिध्यति। आत्मज्ञानार्थिना सर्वेणापि बुद्धिसम्पत् अवश्यं सम्पादनीया। एतस्माद् कारणादेव नवरात्रोत्सवे सरस्वती पूजायाः पूर्वं लक्ष्मीपूजा प्रवर्तते।

यस्तु पुरुषः सत्वगुणसम्पन्नः तस्य वशे भवति सा। शुद्धेन मनसा यदा पुरुषः अध्यात्मरतिः भवति तदा सः शान्तिम् ऐश्वर्यं सम्पदं च प्राप्नोति।

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते।
शंकचक्ररगदाहस्ते महालक्ष्मी नमोऽस्तुते।।
पद्मासनस्थिते देवि परब्रह्म स्वरूपिणी
परमेशि जगन्मातर्महालक्ष्मी नमोऽस्तु ते।।

सात्त्विकस्य मनसः द्योतकः क्षीरसागरः। तस्माद् उत्थिता लक्ष्मीः अस्य एव तत्त्वस्य निरूपणम् करोतीव। लक्ष्म्याः चत्वारो हस्ताः। तयोर्द्वाभ्यां पद्मे धरति सा। पद्मा कमला इत्यपि तस्याः नामानि। अस्याः अर्चामूर्तेःपार्श्वयोः क्वचित् गजौ दृश्येते। एषा हिरण्यवर्णा कथ्यते। देवालयेषु एषा पद्मे आसीना भवति। अस्याः चत्वारो हस्ताः देवी एषा चतुर्वर्गपुराषार्थ प्रदायिनी इति सूचयन्ति।

लक्ष्मीः अष्टसुरूपेषु पूज्यते। तानि च आदिलक्ष्मीः, गजलक्ष्मीः, धनलक्ष्मीः, धान्यलक्ष्मीः, सन्तानलक्ष्मीः वीरलक्ष्मीः विजयलक्ष्मीः, धैर्यलक्ष्मीः च।

**वन्देपद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदां**
**हस्ताभ्यां अभयप्रदां मणिगणैर्नानाविधैर्भूषिताम् भक्ताभीष्टफलप्रदां**
**हरिहरब्रह्मादिभिः सेवितां।**
**पार्श्वे पंकजशंखपद्मनिधि भिर्युक्तां सदा शक्तिभिः।**

चञ्चलां लक्ष्मीः यः अनुधावति तस्य सा दूरे एव तिष्ठति। न तस्य वशमेति। सात्त्विकस्य मनसः द्योतकः लक्ष्मीः सात्त्विकं ऐश्वर्यं सम्पदं च ददाति।

**श्री महालक्ष्म्यै नमः**



# श्रीमुनिवाहनसूरिवैभवम्

- डा.केशवप्रपन्न पान्डे

वृश्चिके रोहिणीजातं श्रीपाणं निचुलापुरे।
श्रीवत्सांशं गायकेन्द्रं मुनिवाहनमाश्रये।।

अथ भूलोकवैकुण्ठाख्यं श्रीरङ्गं निजाङ्काधिरोपणेन प्राप्तवैभवायाः स्वीयदिव्यसलिलामृतमजस्रं पिबतश्च चेतनानुद्धरन्त्याः भगवद्धामदायिन्याः कावेरीपुण्यनद्यास्तीरे विलसति निचुलापुरी इत्याख्यं किञ्चन पुण्यक्षेत्रम्। तत्र च परमधार्मिकस्य भगवद्भक्तस्य धर्मवर्माभिधस्य राज्ञो धर्मपत्न्याः गर्भाद् समजनिभगवत्याः नीळादेव्या अंशेनदिव्या काचित् निचुलापुरीदेव्याभिधयाकन्या। सा च कदाचिद्भगवन्तं रङ्गनाथमवलोक्य तत्क्षणात्तमेव स्वपतित्वेन करणत्रयेणाप्यभिलषन्ती कालान्तरे पित्रोरनुमत्या यथाविधि महता वैभवेन भगवता रङ्गनाथेन सनाथीकृता। तादृशे महतिवैभवोपेते निचुलापुर्याख्ये नगरे कलियुगे द्विचत्वारिंशदुत्तरत्रिशत संख्याकेषुवत्सरेषु अतीतेषु दुर्मति संवत्सरे वृश्चिकमासे रोहिणी नक्षत्रे भगवतः श्रीवत्सांशेन भगवान् मुनिवाहने अवातर।

स च सूरिः जन्मनः प्रभृति भगवत्परिपूर्णकृपाकटाक्ष पात्रो रजस्तमोगन्धरहितः सदा शुद्धान्तः करणः भगवन्तमेवोपायोपेयत्वेन

मन्वानः सर्वदा स्ववीणया भगवद्दिव्यगुणगणैकगाननिरतः सामगानपराणो नद्यास्तस्या दक्षिणे तीरे सानन्दं निवसतिस्म। स तु पद्भ्यां मातरं कावेरी नदीमुल्लङ्घ्य भगवन्तमीक्षितुमनिच्छन् (तत्जलंपद्भ्यांस्प्रष्टुमनिच्छन्) तत एव प्रतिदिनं भगवतो रङ्ग-नाथस्यालयं वीक्ष्य भगवन्तं रङ्गनाथं मनसा ध्यायं ध्यायंसेवते नाम। भक्तो भगवतोऽत्यर्थप्रियतया स्वभक्त विश्लेषद्भ्यां सहमानोपरमकारुणिको भगवान् रङ्गनाथः स्वीयमधुरैर्दिव्यगानैर्नित्यं प्रीणयन्तं स्वीयभक्ताग्रेसरं श्रीपाणासूरिंसाक्षाद्रष्टुकाम एकदा निजार्चकवरं लोक सारङ्गमुनिं तत्स्व-प्रादुर्भूयकावेर्याः दक्षिणे तीरे निवसन्तं स्वीयभक्तमणिं श्रीपाणसूरिं स्वकन्धयोरारोप्यनिजालयं प्रत्यानेतुमादिदेश।

स चमहामुनिः भगवदादेशं शिरोधार्यं कृत्वा ब्राह्मीमुहूर्ते चोत्थाय निर्वर्तित स्नानाद्याह्निकः श्रीपाणमुनिसकाशं गत्वा तञ्च दण्डवत्प्रणिपत्य भगवता रङ्गनाथेन स्वप्ने आदिष्टं सर्वमपि वृत्तान्तं ज्ञापयामास। परं नैच्यानुसन्धानेन श्रीपाणसूरिस्तुस्वीय पद्भ्यां कावेरीमध्यस्थितं भगवदालयं स्पृष्ट्वा तत्र गन्तुं नैच्छत्, तदा भगवदादिष्टो लोकसारङ्ग मुनिस्तं सप्रेविनम्रतया स्वीयकन्धयोरारोप्य श्रीरङ्गनाथ दिव्यविमानमानिनाय। तत्र च भक्तवत्सलो भगवान् तमनुग्रहीतुकामः स्वीयमङ्गल विग्रहम् आपादचूडमवयवशः सन्दर्शयामास। भगवतो निर्हेतुकरुणयाधन्यस्तु स मुनिरात्मनः शेषभूतत्वं स्मरन्प्रथमं तदी-यचरणारविन्दावेवददर्श चक्षुषामनसावाचा च। ततस्तदनुभवेनातृप्तः तदीयापरिमितसौन्दर्येणाकृष्टश्च क्रमेण भगवतोऽ प्राकृतदिव्यसर्वावयवं 'अमलनादिप्पिरान्' इत्याख्यपद्यदशकेन संसारभोगि सन्दष्टानां जीवनां जीवातुभूतेन दिव्य प्रबन्धेन संसेव्यतस्मिन्नेव भगवति रङ्गनाथे तदनु ग्रहेण तेनैवनिजपाञ्चभौतिकेण शरीरेण सायुज्यामवाप।

**ज्ञातव्योंऽशः तामेत्तर्चतेत्तां प्रयेत्तां भजेत्तां विचिन्तयेत्।**
**विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्।।**

इत्युक्तप्रकारेण भगवान् स्वभक्ताग्रेसरंज्ञानिनं पुरुषं सशशीरमेव आत्मसात्कारोतीति भावः।



# कर्नाटकहरिदासाः प्रसन्नवेङ्कटदासाः

- विद्वान् वि.प्रदीप् कुमारः

कर्नाटकराज्ये बीजापुर(विजयपुर) परिसरप्रान्तेषु बागलकोट् इति ग्रामे नरसप्पखाकण्डकि, लक्ष्मीबायि इति दम्पत्योः द्वौ पुत्रौ आस्ताम्। ज्येष्ठः राघवेन्द्र इति, कनिष्ठः वेङ्कण्ण इति। १६८० तमे वर्षे वेङ्कण्णः जन्म प्राप्तवान्। पिता नरसप्पः वेद, शास्त्रज्ञ आसीदित्यतः तयोः जीवनं अनायासेन प्रचलति स्म। १७ तमे शतमाने मुघल् राजभिः पीडिताः खाकण्डकिब्राह्मणाः ग्रामान्तरं गताः। निर्गतेषु ब्राह्मणेषु नरसप्प अपि एकः। एवं ते खाकण्डकि ग्रामतः बागलकोट् ग्रामं प्राप्तवन्तः। कालक्रमेण राघवेन्द्र अपि वेदादीनधीत्य पितुः साहायाकः अभूत्। बहुकालानन्तरं अनयोः दम्पत्योः वेङ्कण्ण अजनि। वार्धक्ये जनितस्य शिशोः विषये पित्रोः अतीव चिन्ता जाता। माता लक्ष्मीबायि परमात्मनः भक्तिगीतानां श्रावणेन तं शिशुं पालयतिस्म। परमात्मा वेङ्कटेश एव समेषां जीवानां परिपालकः। आवां तु किञ्चित्कालपर्यन्तमेव त्वां पालयावः। सः वेङ्कटेश एव शाश्वतः पोषकः। यो जनः तं सेवते तं स परमात्मा कदापि न त्यजति इत्यादिभिः वचोभिः तं शिशुं



वर्धापितवती। वेङ्कण्णस्य अष्टमे वयसि उपनयनसंस्कारं प्राप्तम्। ततः अत्यल्पसमये एव मातापितरौ पञ्चत्वं गताः। तं बालं पोषयितुं प्रतिवेशिनः राघवेन्द्रं विवाहं कर्तुं प्रचोदितवन्तः। तेन राघवेन्द्रः कावेरम्म इति नाम्नीं कन्यां विवाह। सा च स्वभावत एव क्रूरस्वभावा आसीत्। आतपे सञ्चारेण पिपासुः वेङ्कण्णः तां तक्रं पृच्छति। तच्छ्रुत्वा अतीवक्रुद्धा सा तं दुर्वचोभिः निन्दति। खिन्नमनस्कः वेङ्कण्णः अनुक्त्वा एव गृहान्निर्गतवान्। तदानीं द्वादशवयस्क आसन् वेङ्कण्णः। सः मार्गमध्ये गायन्तमेकं समूहं दृष्ट्वा तैः सह तिरुपति ग्रामं  प्राप्नोति। यदा सः वेङ्कटेश्वरं पश्यति तदा निरवधिकानन्दं प्राप्नोति।

एवं कश्चिद्दिनविशेषे वेङ्कण्णस्य प्रबलेच्छा जायते यत् श्रीनिवासस्य निजरूपदर्शनविषयकम्। तदा वेङ्कण्णः भक्त्या श्रीनिवासं पश्यन् वक्तुमारभते "हे श्रीनिवास कुतः मां अस्मिन्भूतले आनीतवान्? मां कुतः अनाथमिव कृतवान्? कुतः मां विद्याविहीन इव कृतवान्। हे प्रभो! मयि प्रसन्नो भूत्वा मम अज्ञानं नाशय, अन्यथा तव पादकमलेष्वेव मम प्राणत्यागं करोमीति ब्रुवन् दिङ्भ्रान्तो भवति। तस्य भक्त्या अतीवसन्तुष्टः श्रीनिवासः प्रत्यक्षो भवति। भक्तस्य वेङ्कण्णस्य जिह्वाग्रे "प्रसन्नवेङ्कट" इति बीजाक्षराणि विलिख्य तं प्रतिवदतिवत्स इदानीं प्रभृति लोकोऽस्मिन् प्रसन्नवेङ्कटदासः इति नाम्ना भवान्प्रसिद्धो भवति। त्वयि स्थितमज्ञानं नष्टम्। इदानीं भवान् ज्ञानी अस्तीति। तेन अतीवसन्तुष्टस्य प्रसन्नवेङ्कटेशस्य नयनादश्रुबिन्दवः निर्गताः। तस्मिन्नेव समये प्रसन्नवेङ्कटेशस्य मुखादेवं गानं प्रस्तुतम् -

**तप्पु नोडदे बन्देय यन्नय तन्दे। अप्प तिरुवेङ्कटेशदोरयने निर्दोषने -**

इति इत्येवं प्रकारेण दाससाहित्ये यथा पुरन्दरदासाः, विजयविठलदासाः, जगन्नाथदासाः, गोपालदासाः प्रसिद्धाः सन्ति तथा प्रसन्नवेङ्कटदासाः अपि सुप्रसिद्धाः सन्ति।






# पद्मसरोवरः

तेलुगु मूलम् - श्रीनिवासादीक्षितुलु

संस्कृतानुवादः- सुजाता मुनुकुट्ल

चित्रम्- के. द्वारकानाथ्

श्रीनिवासः सुवर्णमुखीनद्यास्तीरं प्रति गतवान्। तत्र शुकमहर्षेः आश्रमस्य समीपे श्रीनिवासः स्वयमेव एकस्य सरोवरस्य खननमकरोत्। तदनन्तरं श्रीनिवासः...












४. तस्मिन् सरोवरे सुवर्णकमलनां वपनं स्वयमेव अकरोत् श्रीनिवासः।




५. सरोवरस्य प्राचीदिग्भागे सूर्यस्य प्रतिष्ठामकरोत् श्रीनिवासः।




६.तस्मिन् सरोवरे स्नानमाचरन्, त्रिसहस्रवारं महालक्ष्मीमन्त्रजपं कुर्वन्, सहस्रसुवर्णपद्मैः तां अर्चयति स्म श्रीनिवासः। गोक्षीरमेव आहाररूपेण स्वीकरोति स्म। पुष्करकालं समाप्तम्। श्रीनिवासस्य समीपं नारदः आगत्य...



७. तदनन्तरं शुकमहर्षिः अन्ये मुनयश्च आगत्य श्रीनिवासं परामर्शितवन्तः।

स्वामिन्! भवन्तः तपसः विरमणं कुर्वन्तु।

तस्याः प्रसन्नतायाः परमेव तपसः विरमणं करोमि।



८. मुनयः पाताले विद्यमानायाः महालक्ष्म्याः समीपं गत्वा..

महालक्ष्मि! भवत्यै श्रीनिवासः कठोरतपः करोति। कोपं त्यक्त्वा पद्मसरोवरं प्रविशतु मातः।



९. कपिलमहर्षिरपि महालक्ष्म्याः कृते विश्वासपूरकवचनानि उक्तवान्। तदा...

अस्तु... भवतां इच्छां सम्मानयन् आगच्छामि।



१०. कार्तिकमासे... शुद्धपञ्चमी... उत्तराषाढः... शुक्रवासरः... अमृतघटिकायां पद्मसरोवरे मुनीनां समक्षे...

तस्मिन् सरसि सहस्रपत्रैः पद्मं विकसितम्... ततः स्वर्णरथारूढा सम्पदः माता...



श्रीनिवासस्य समीपम् आगत्य कमलपुष्पमालां कण्ठे समर्प्य नमस्कृतवती अनुरागवल्ली...



११. स्वामिन्! मम प्रणततती: स्वीकुर्वन्तु।

देवि! मम वक्षस्थलमेव भवत्याः स्थिरनिवासः।






आगामि सञ्चिकायां श्रीवेङ्कटेश्वरस्य अन्यदिव्यलीलाविलासं दृष्ट्वा... तराम...

स्वस्ति।

बालनीति

# भगवति विश्वासवतः सर्वार्थसाधकत्वम्

- विष्णु वर्धन्



एकस्मिन् ग्रामे एकः कर्मठः ब्राह्मणः वसति स्म। प्रतिदिनं स भगवदभिषेकार्थं एकस्मात् गोपालकात् गोक्षीरं क्रीणाति स्म। स गोपालकः प्रतिदिनं सूर्योदयात् पूर्वमेव समीपस्थग्रामात् गोक्षीरं स्वीकृत्य, मार्गमध्ये एकां नदीं तीर्त्वा पञ्चवादनाभ्यन्तरे एव अस्मै ब्राह्मणाय क्षीरं ददाति स्म। एकदा वर्षऋतौ स गोपालकः प्रतिदिनं सकाले न आगच्छति।

तदा स ब्राह्मणः गोपालकम् एवम् अपृच्छत् - ''अयि! भोः! गोपालक! किमर्थं प्रतिदिनं विलम्बेन आगच्छति? भवतः विलम्बेन भगवतः अभिषेकमपि विलम्बो भवति। विलम्बस्य कारणं किम्?'' इति।

गोपालकस्तु एवमुत्तरं अदात् - ''हे! ब्राह्मणोत्तम! मार्गमध्ये एका नदी प्रवहती अस्ति किल! इदानीं तु वर्षाकालः, अतः सा नदी उग्ररूपेण प्रवहति। तां नदीं तीर्त्वा अत्रागन्तव्यमस्ति। अत एव प्रतिदिनं विलम्बो भवति। यदि त्वम् तरणोपायं वेत्सि। माम् उद्बोधयन्तु।'' इति।

तदा स ब्राह्मणः - ''हे! गोपालक! अत्यन्तदुस्तरस्य संसारसागरस्य तरणे परमोपायो भवति भगवान् श्रीमन्नारायणः। सामान्य नदीतरणे स उपायो न भवति किम्। मां पश्यतु अहं प्रतिदिनं भगवदाराधनं करोमि। तस्मादहं जलानामुपरि पद्भ्याम्। एव गन्तुं शक्नोमि। त्वं मादृशो न

भवति किल। नदीतरणसमये भगवन्नामस्मरणं कृत्वा शीघ्रम् आगच्छतु।'' इति किञ्चित् गर्वेण संभष्य क्षीरं स्वीकृत्य भगवदभिषेकार्थं गतवान्।

अथ स गोपालकः ब्राह्मणस्य उक्तिं पुनः पुनः विचिन्तयन् स्वगृहं गत्वा, दिवारात्रं भगवतः नामसंस्मरणमेव कुर्वन् एवं विनिश्चितवान् - ''महाभाग्यशाली भवति अयं ब्राह्मणोत्तमः। सः प्रतिनित्यं भगवदाराधनं करोति। अत एव तस्य तादृशी शक्तिः भवति। तस्य उक्तिमनुसृत्य अहं भगवन्नामसंस्मरणेन पद्भ्य नदीं तीर्त्वा श्वः क्षीरं नयामि'' इति।

स गोपलकः सूर्योदयात् पूर्वमेवोत्थाय स्नानादिकमपि कृत्वा, गोक्षीरं शिरसि धृत्वा, नदीसमीपं गतवान्। एकवारं स्व आचार्यं ब्राह्मणोत्तमं स्मृत्वा, भगवन्नामस्मरणं कुर्वन् स्वात्मरक्षाभरन्यसनञ्च कृत्वा जलमध्ये पादं स्थापितवान्। अत्याश्चर्यरूपेण स्वपादद्वयं पर्णवत् नदीजलानामुपरि प्लवते इति ज्ञात्वा, वेगेन नदीं तीर्त्वा ब्राह्मणं समेत्य पञ्चवादनाभ्यन्तरे एव क्षीरं दत्तवान्।

तदा स ब्राह्मणः - कथम् अद्य शीघ्रमागतवान्? इत्यपृच्छत्। तस्मिन्नेव क्षणे स गोपालकः ब्राह्मणं दण्डवत्प्रणम्य, भवदुक्तरीत्या भवतामाशीर्भिः भगवन्नामस्मरणेन नदीजलोपरि पद्भ्यामेव समागतवान् इत्यवदत्। तद्वाक्यं श्रुत्वा ब्राह्मणः विस्मयो भूत्वा - ''भवान् असत्यं वदति किम्? इति अपृच्छत्। गोपालकस्तु - ''नित्यं भगवदाराधनं कुर्वतां भवतां उपदेशः निरर्थकः कथं भवेत्? अहं सत्यमेव वदन्नस्मि ब्राह्मणोत्तम!'' इति उक्तवान्।

अनन्तरं स ब्राह्मणः गोपालकमनुसृत्य नदीतीरं गत्वा, स कथं नदीं तरतीति दृष्टवान्। तदा दुःखितो भूत्वा स्वकीयमहङ्कारं त्यक्त्वा, भगवदाराधने भक्तिः विश्वासः, ऐकान्त्यबुध्दिश्च अत्यन्तप्रधानभूता इति ज्ञातवान्।

**नीतिः -** यस्य भगवद्भक्तिः अकुण्ठितविश्वासश्च भवति तस्य असाध्याः (साधयितुम् अशक्याः) अपि कार्य्याः सुसाध्य एव भवेयुः।





# विशिष्ट बालिका

| | |
|---|---|
| बालिकायाः नाम | : एस्.भव्या |
| कक्ष्या | : सप्तमी कक्ष्या |
| जन्मदिनाङ्कः | : १४ दिनाङ्कः, जनवरी २००९ |
| पाठशाला | : सर्वोदयविद्यालयः नलन्चिराः तिरुवनन्तपुरम् |
| मातुः नाम | : बि.जि.स्मिता |
| पितुः नाम | : गिरीश् चन्द्रन्.पि |
| नैपुण्यं | : शास्त्रीयसङ्गीतम्, शास्त्रीयनृत्यम् (भरतनाट्यम्, कूचिपूडि) भगवद्गीता पठनम्, कलरी |

पुरस्काराः : प्रचण्डकलाकारिणी भारतीयशास्त्रीय सङ्गीतनृत्याभिनेत्री, भारतीयकलासांस्कृतिकेषु, एषा पञ्चवर्षादारभ्य शास्त्रीयसङ्गीतशिक्षणं स्वगुरुः श्रीमति लक्ष्मी शुभायाः सविधे शिक्षिता अस्ति। सा सभायां भागग्रहणमपि तदानीमेवाराब्धा। दशवर्षादारभ्य सा हरङ्गनिसरि पाठशालायां गुरूणां पर्यवेक्षणे श्री ज्योतिकुमारः एवं श्रीमति आशायाः अध्यक्षपर्यवेक्षणे प्रथमपुरस्कारं ललितसङ्गीते पाठशालायां २०१८ वर्षे प्राप्तवती।

सा शास्त्रीयनृत्यशिक्षणं बहुकालतः स्वगुरुः श्रीमति शैजायाः सविधे भरतनाट्यकूचिपूडि विभागेषु विशेषकौशलं प्राप्तवर्ति। सा प्रथमवारं प्रथमाभिनयं २०१९ अट्टकुलंदेव्याः नवरात्रिपूजायां नृत्यितवती। एवमेव सा पद्मनाभस्वामिनः देवालये, आंग्लपर्वदिने अभिनयं कृतवती।

एषा भगवद्गीतायाः शिक्षणमपि स्वगुरोः लक्ष्मीशुभायाः सविधे स्वीकृतवती।

केरलायाः कला 'कलर्यामपि' शिक्षणं (C.V.N) कलरि संस्थायां गुरुः डा.गौतमस्य सविधे शिक्षिताऽस्ति।

# रसप्रश्नाः

- एन्. उमादेवी



१. आकाशराज पुत्रिका का ?

अ. शैलपुत्री  आ. पद्मावती

इ. सरस्वती  ई. महाकाळी

२. पद्मावतीदेवी कुत्र आविर्भूता?

अ. गोविन्दराज पुष्करिण्यां  आ.आकाशगङ्गायां

इ. पापविनाशने  ई. पद्मसरोवरे

३. श्रीनिवासः देवीं पद्मावतीं कुत्र परिणयं चकार?

अ. नारायणवने  आ. नागलापुरे

इ. अप्पलायगुण्टक्षेत्रे  ई. तिरुमलक्षेत्रे

४. श्रीपद्मवतीदेव्याः ब्रह्मोत्सवः कस्मिन् मासे प्रचलन्ति?

अ. आश्वयुजमासे  आ. कार्तिकमासे

इ. माघमासे  ई. वैशाखमासे

५. श्रीपद्मवतीमातुः ब्रह्मोत्सवेषु का सेवा प्रसिद्धा?

अ. शेषवाहनसेवा  आ. हंसवाहनसेवा

इ. गजवाहन सेवा  ई. अश्ववाहनसेवा

६. श्रीपद्मावतीदेव्याः तीर्थोत्सवेषु कः प्रसिद्धः?

अ. घोणतीर्थोत्सवः  आ. कुमारधारातीर्थोत्सवः

इ. कपिलतीर्थोत्सवः  ई. पञ्चमीतीर्थोत्सवः

७.अलिवेलुमंगापुरक्षेत्रम् कुत्र अस्ति?

अ.तिरुपति समीपे  आ.गूडूरु समीपे

इ. नगरि समीपे  ई. चन्द्रगिरि समीपे

---

उत्तराणि: १.आ २.ई ३.अ ४.आ ५.इ ६.ई ७.अ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।



